# यागीयं लौकिकविज्ञानं लोकोपकारकम्

Dr Girijaprasad Shadangi, Assist Professor,
Sri Venkateswar Vedic University, Tirupati

"काण्डद्वयोपपाद्याय कर्मब्रह्मस्वरुपिणे
स्वर्गापवर्गरुपाय यज्ञेशाय नमोनमः।।"

किं अद्यतनबौद्धिकसमाजः यागानां प्राचीनपरम्परां जानाति अथवा प्रचलितपरम्परां स्वीकरोतीति महत्वपूर्णप्रश्नः सहसाग्रे उदेति। युक्त्या स्वविचारं प्रतिपादयन्तः इदानीन्तन सामाजिकव्यवस्थायां विद्यमानाः जनाः प्रत्येकमपि कर्मादौ पूर्वापरमेव ज्ञातुमिच्छन्ति। तत्राग्नौ द्रव्यत्यागरूपयागानां दर्शने तेषां मनसि शङ्कानद्यः प्रवहन्ति। तस्य शङ्कायाः निवारणार्थं विद्यमानयाज्ञिकाः तत्पराः भवेयुः अन्यथा यागव्यवस्थायाः शनैःशनैः लोपस्स्यादिति। एतदर्थं प्रत्येकमपि करिष्यमाणस्य यागकर्मणः सम्बन्धिनां विधिनिषेधफलानां सामान्यजीवनोपयोगिताविषयकज्ञानमवश्यं सम्पादयेयुः। यज्ञविषये बहवः श्रद्धालवः विद्यन्ते। परन्तु तेषां श्रद्धां बहुकालपर्यन्तं सुदृढीकर्तुं, तस्यगुणदोषाः तर्कयुक्तेन प्रमाणेन ज्ञापनीयाः अन्यथा तार्किकयुगेऽस्मिन् तर्कविहीनस्य कर्मण उपयोगं नानुमन्यन्ते। तस्य ज्ञानार्थं "अनाहूतोऽध्वरं गच्छेत्" इति प्रसिद्ध वचनानुसारं यागानां दर्शनं प्रयत्नपूर्वकं करणीयम्।

श्रौतस्मार्तमाध्यमेन नैकयागानां लोकेप्रवृत्तिरस्तीति ज्ञायते। देवतोद्देशेन द्रव्यत्यागः यागः। जलवाय्वादि प्राकृतिकतत्वानां शुद्धिः, संसारेविद्यमान प्राणिनां लाभार्थं उत्कर्षार्थं विद्याधनाद्युपयोगः क्रियते यत्र महत्फलं च अवाप्यते, स एव यज्ञः । यज्ञः द्विविधः– श्रौतयज्ञः येषां विधानं ब्राह्मणग्रन्थेषु निगदितम् । अन्यश्च स्मार्तः पाकयज्ञः येषां विवरणं स्मृत्या गृह्य धर्मसूत्रेण कृतम्। श्रौतयज्ञस्य भेदद्वयं हविर्यज्ञः सोमयज्ञश्चेति। पयः दधिघृतपुरोडाशसोमवल्ली इत्यादीनि विशेषरुपेण श्रौतयागेषु द्रव्यरुपेण विनियुज्यन्ते। यागार्थं इष्टका, यज्ञशाला, अग्निचयनं ,पात्रनिर्माणं, कालज्ञानं, स्तोत्रं शस्त्रादि महत्वं पात्रं वहति। स्मृत्याधारीकृतयागे (गणहोम,सुदर्शनहोम,चण्डीहोम,वास्तुहोम,प्रतिष्ठा,षोडशकर्मादिषु) उपयुज्यमानानां याज्ञिकसमिधां अपूपादीनां च विनियोगः वहु दृश्यते। यागाः बहवः। यागोपयोगिद्रव्यादिपरिकराश्च बहवः।

यागानां स्वरुपप्रयोजनं किमिति किञ्चदत्र विविच्यते- यज्ञे समस्त जडचेतनमयजगत्परस्परं लाभान्वितं भवति। श.ब्रा 1.7.45 यज्ञो वै श्रेष्ठतमं कर्म इति यज्ञस्य श्रेष्ठतमत्वं प्रतिपादितम्। कर्मयज्ञ,ज्ञानयज्ञ उपासनायज्ञेति त्रिविधः। षोडशसंस्कारः, शिक्षा, आहार, वस्त्र, गृह, समाज, राज्य, कृषि, पशुपालन, संगीत, गणित, भूगोल,ज्योतिष,वैद्यक,रसायन,यन्त्र, शस्त्र, वाहन युद्धविद्यादि कर्माणि- कर्मयज्ञस्वरुपाणि। ईश्वर, जीव, पुनर्जन्म, कर्मफल, सृष्टि, प्रलय, वर्ण, आश्रम, स्वाध्यायादि- ज्ञानयज्ञ-

स्वरूपाणि। सदाचारः, दया, प्रेम, दर्शन, भक्ति, वैराग्य, योग समाधिक्रियाः उपासनयज्ञस्वरुपाः भवन्ति*। एते यज्ञाः ऐहिकामुष्मिकज्ञानस्य साधनानि दृश्यन्ते।तत्र च -

यज्ञेगणितविद्या- गणितविद्या अङ्कगणित रेखागणितभेदेन द्विधा। यज्ञे गणितविद्यायाः प्राचुर्येणोपयोगः दृश्यते। "इमा मे अग्न इष्टका धेनवः सन्त्वेका च शतं च सहस्रं चायुतं च नियुतं च प्रयुतं चा न्यर्वुदं च समुद्रश्च मध्यं चान्तश्च परार्धश्चेमा मे अग्न इष्टका धेनवः सन्तु.......ष्मिल्लोके" (तै.सं-4.4.11) अत्र एकतः परार्द्धपर्यन्तं संख्या उक्ता। होमकुण्डनिर्माणार्थं, हवनसंख्यानिर्धारणार्थं ,ओषधिद्रव्याणां तथा सोमक्रयणार्थं अङ्कविद्यायाः उपयोगः दृश्यते। इतोऽपि रेखागणितस्योपयोगेन ग्रहोपग्रहाणामवस्थितिः तेषां परिधिः,व्यासः, दैर्घ्यं , दूरत्वं च प्रकाश्यते। यज्ञकुण्डं रेखागणितमाधारीकृत्यैव निर्मीयते (कृ.य-5.4.11) अत्र कुण्डानां वर्णनं सूत्रग्रन्थे दृश्यते। तानि च चतुरस्रश्येन, वक्रपक्ष, व्यस्तपुच्छ, कङ्कचित, अलजचित, पउगचित उभयतःप्रउग नाम्ना प्रसिद्धानि। एतानि सर्वाणि पक्ष्याकाराणि। कुत्रचित् भिन्नभिन्नस्वरुपपक्षीणा -माकारद्वयमेकत्र द्रष्टुं शक्यते। अतः सर्वत्र याज्ञिकविधिविधानं रेखागणित चित्रलिपिमाध्यमेन सम्भवितुमर्हति। शुल्बसूत्रादीनां ज्ञानमवश्यं सम्पादनीयम्।

यज्ञे कला कौशल्य,कृषि एवं पाकशास्त्रः- अद्य यत् इण्डष्ट्री कथ्यते पूर्वे तत् शिल्पशास्त्रं अथवा कलाज्ञानं कथयन्ति स्म। एतद्ज्ञातारं विश्वकर्मा अथवा शिल्पिनाम्ना कथयन्ति। यज्ञमण्डप,कुण्ड, यज्ञपात्र, शस्त्रास्त्र, शकट रथादीनां याज्ञिकवस्तूनां समावेशः अत्र भवति। यज्ञपात्राणि मृण्मय, काष्ठ, शिला, ताम्र, सुवर्णरौप्यमयानि भवन्ति। यज्ञे तावत् बहुप्रकारकान्नानि ओषधयश्च उपयुज्यन्ते। एतेषां उत्पादनार्थमावश्यक वस्तून्यपि निर्मीयन्ते। चक्रादि जलनिष्कासनार्थं,भूमिखननं,कर्तनं,पेषणं, अवहननं इत्याद्यर्थं भिन्नभिन्न - यन्त्राणां निर्माणं क्रियते। यज्ञरक्षार्थं धनुर्बाणं तस्यवहनार्थं रथादीनि उपयुज्यन्ते, तेषां निर्माणार्थं सर्वापि सामग्र्यः भवन्ति। वीणा,मृदङ्गादि सङ्गीतार्थं, शङ्ख,घण्टादि उत्सवार्थं रणभेर्यादि युद्धार्थं वाद्यान्यपि निर्मीयन्ते। यज्ञे वस्त्राणामुपयोगः बहुलं क्रियते। स्त्रीपुंसानां कृते वस्त्रनिर्माणकौशलं दृश्यते। कुलालेभ्यः कर्मारेभ्यश्चवो नमः इति सर्वेषां कर्मकर्तृणामादरातिथ्यान्नव्यवस्थापि कृतावर्तते। तत्र न केवलं ब्राह्मणानां विशेषता अपि तु शिल्पिनां,रथकाराणां ,कृषकाणामन्येषाञ्च समानगौरवातिथ्यं भवति। यज्ञे वर्णव्यवस्थायां सत्यां सर्वेषां समानभागित्वमुच्चसामाजिकव्यवस्थायाः प्रतीकत्वेन दृश्यते। यागे नैकेषां कृषि उत्पन्नद्रव्याणा - मुपयोगः क्रियते। कृषि उपयोगस्थले वासार्थं यज्ञार्थं च बहुत्रोक्तम्- यत्र वा अस्यै बहुलता ओषधयः तदास्या उपजीवनीयताम्-यत्रौषधीनां बहुलतास्ति तत्र यागोऽनुष्ठेयः,वासोऽपि कर्तव्यः इति शतपथब्राह्मणम्।

विश्वजनसमता- विश्वसमत्वं,सर्वसुखायप्रवृत्तिः इत्येतादृशाः विषयाः वैदिके यागप्रसङ्गेषु सर्वत्र दरीदृश्यन्ते। यागार्थं शालानिर्माणसमये अयं मन्त्रः पठ्यते विश्वजनस्य च्छाया (आ.श्रौ.सू पृ-202) इत्यस्य

एवं व्याख्या यत्सदः निर्मीयते तत् सर्वजनानां गृहप्राप्तये भव इति। किन्तु शन्नो अस्तु द्विपदे शञ्चतुष्पदे मनुष्येणैव सुखं न प्रार्थ्यते, अपि तु पशुपक्षिमृगादिभिरपि मङ्गलमाशास्यते।

ऋतूनां समर्थत्वम्- सर्वेषु यागेष्वादौ प्रयाजा यदा अनुष्ठीयन्ते तदा सर्वेषां ऋतूनां सफलता होमद्वारा उत्पद्यतामिति प्रार्थना वर्त्तते। 1. समिधो यजति- वसन्तमेवर्तूनामवरुन्धे। 2. तनूनपातं यजति- ग्रीष्मं एवावरुन्धे। 3. इडोयजति- वर्षा एवावरुन्धे इत्यादि । वेदे ,स्मार्त श्रौतादिग्रन्थेषु न केवलं यागानामपि तु मन्त्राणां प्रयोगमाध्यमेन सामाजिककल्याणार्थं बहवः विषयाः प्रतिपादिताः । ते तु यथा-

अग्निसकाशात् गृहपरिरक्षणम्- अग्निदाहात् परिरक्षणार्थ गृहनिर्माणाविधानं मन्त्ररहितमेव सूत्रकारैः प्रत्यपादि- (आ.श्रौ.सू पृ-150) गर्तेष्ववकाशीपालमित्यवदध्यात् नास्याग्निः गृहस्य दाहुको भवतीति विज्ञायते इति।

शुष्कताप्राप्तं क्षेत्रं पुनः सञ्जीवयितुमिच्छता पुरुषेण कारीरेष्टिरनुष्ठीयते- "एतद्वै वृष्ट्यैरूपं सरुप एवभूत्वा पर्जन्यं वर्षयतीति" (तै.सं-2.4.9)। करीरफलसक्तुद्रव्यमत्रहोमसाधनं सत् वृष्टिजनकं भवति। अतिवृष्टि निवारणं अनावृष्टौ वृष्टेः सम्पादनं कारीरेष्ट्या क्रियते। अनावृष्टिसमये वृष्ट्यर्थं अवर्षणयज्ञादीनां प्रयोगः दृश्यते। निकामे निकामे नः पर्जन्यो वर्षतु –इच्छानुसारेण पर्जन्यो वर्षतु इत्यनेन स्पष्टं भवति।

*यज्ञेपदार्थविज्ञानस्योपयोगः दृश्यते । वृष्ट्यर्थं एवं च वायुशुद्ध्यर्थं यज्ञस्य प्रयोगः मुख्यरुपेण क्रियते। अतः ऋत्विजः वायुजलअग्निसम्बन्धिसूक्ष्मज्ञानस्य ज्ञातारः भवन्ति। किमर्थं चेत् वृष्टिः वायुचक्रोपरि वायुचक्रः शीतोष्णादीनामुपरि शीतोष्णः ग्रहोपग्रह एवं पृथिव्याः सञ्चरणे अवलम्बनं भवन्ति। "वायुः अन्तरिक्षस्याधिपतिः"- (अ.वे-5.24.)।।

द्रव्यदृष्ट्याविचार्यमाणे सोमलता मुख्यतया यागानां निर्वहणं सोमरसेन क्रियते। *सोमलतायां शुक्लपक्षे पत्राणि उद्भवन्ति कृष्णपक्षे नश्यन्ति। हरितवर्णा इयं लता फलपुष्परहितैव। अस्माकं देशे हिमालय, महेन्द्राचल, श्रीशैलादि प्रदेशेषु विशेषेणोपलभ्यते. यथा अश्वानां निवासस्थलं अर्व, गवां निवासस्थलं व्रज तथैव सोमवल्याः प्राप्तिस्थलं मौजवदुच्यते। सोमस्यैव मौजवतस्य भक्षो (ऋग्वेद-10.34.1)सोमलतायाः गुणधर्मं विविच्य यज्ञे प्रयोजनविषये उच्यते- "सोममादायाध्वरकल्पेनाहृतमभिसुतमभिहुतं च" सोमलतामादाय अध्वरकल्पानुसारं हुते सोमकाण्डं सुवर्णसूच्याविदार्यपयोगृह्णीयात् अर्थात् सोमवल्लीं सुवर्णसूच्या विदार्यनिर्गतरसं पिबेत् अनया उक्त्यापद्धत्या यो रसं पिबति तं अग्निः न प्रज्वालयति, शतसहस्रहस्तिबलमपि प्राप्नोति, संसारे सर्वत्र विचरितुं प्रभवति च । दशशतवर्षसहस्राणि नवां धारयते तनुम् –एतावत् कालपर्यन्तं युवावस्थां प्राप्तोति। "अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा। अग्निं च

विश्वशम्भुवमापश्च विश्वभेषजीः" (ऋ.1.13.20.) एतादृशं बहुत्र सोमलताविषये ज्ञानं प्राप्तुं शक्नुमः। पदार्थविज्ञान दृष्ट्या विचार्यमाणे यागे उपयुज्यमान द्रव्येषु एकैव सोमलता यदि एतावत्छक्तिशालीनि तथा च गुणगरिमायुक्ता तर्हि अन्येषां सर्वेषां यज्ञीय द्रव्याणां प्रयोगेन किं वा साधयितुं न शक्यते।।

यज्ञात् ऋणमुक्तिः- "जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणवा जायते" (तै.सं-6.3.10)। प्रत्येकमनुष्यः देवऋणं ऋषिऋणं पितृऋणमनुभवति। पुत्रेष्टियज्ञेन पितृऋणात्मुक्तिः, कर्मणा देवऋणात्, अध्ययनेन ऋषिऋणात् विमुच्यते। "अथ यत् प्रजाम् इच्छते यत् पितृभ्यो निपृणाति तेन पितृणाम्"- श.ब्रा-14.4.2.29. पिण्डपितृयज्ञविधानेनोक्तं महारोगेणवाभितप्तः प्राश्नीयादन्यतरां गतिं गच्छति (आ.श्रौ 2.7.17) ते के महारोगाः –

"वातव्याधिः प्रमेहश्च कुष्ठश्चाऽथ भगन्दरः।
अर्शोऽश्मरी मूत्रकृच्छ्रो भवत्युदमष्टमम् इति" (आ.श्रौ.पृ.120) ।

यज्ञेविविधविद्यायाः उपयोगः- यज्ञे प्रयुज्यमानानां मन्त्राणां स्वरज्ञानाभावे अनुकूलफलाभावः प्रत्युत विपरीतफलं च जायते। तथा च कथ्यते -

"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो नतमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रः शत्रुः स्वरतोपराघात्।।" (ना.शि-1.1.5)

अनुकूलं फलम्- "क्रुष्टेन देवा जीवन्ति प्रथमेन तु मानुषाः।
पशवस्तु द्वितीयेन गन्धर्वाप्सरसस्त्वनु।
अण्डजाः पितरश्चैव चतुर्थस्वरजीविनः।
मन्द्रस्त्वेवोपजीवन्ति पिशाचाऽसुरराक्षसाः।
अतिस्वारेण नीचेन शिष्टं स्थावरजङ्गमम्।
सर्वाणि खलु भूतानि धार्यन्ते सामिकैः स्वरैः।। ना.शि-1.7.6,7,8

यज्ञे स्तोत्ररूपेण सामस्वराणामुच्चरणेन प्रपञ्चेविद्यमानानामुपकारः भवति तस्यैव स्पष्टमुदाहरणमेतत्। सामविधानब्राह्मणे मन्त्रभेदेन,निधनभेदेन,द्रव्यभेदेन,कालभेदेन,सङ्ख्याभेदेन कृत जपहोमपारायणादिभिः पुत्रप्राप्तिः(सा.ब्रा-2.4.1-5),लक्ष्मीप्राप्तिः(3.1.5-7),दीर्घायुषं प्राप्तिः(2.1.9,10),मेधाप्राप्तिः, ब्रह्मवर्चस - प्राप्तिः (2.7.1-3), सर्वजनप्रियत्वम्(2.6.6), जरामृत्युरहितत्वम्(2.4.9), यक्ष्मादिरोगात्मुक्तिः (2.3.9), क्षुत्पिपासात्मुक्तिः (2.3.7), श्रुतनिगदीत्वम् (2.7.4-11), पशुधनधान्यप्राप्तिः (3.2.5), देवगन्धर्वाप्सरो दर्शनं (3.7.5,6) इत्यादीनि प्रयोजनानि सिद्ध्यन्ति। तदुक्तं बहुपशुधनधान्यहिरण्यमायुष्मत्पुरुषं वीरसस्सुभगाऽ

विधवस्नीकं शिवं पुण्यं वास्तु भवति इति (3.4.7) यज्ञकर्मानुष्ठानेन वसिष्ठविश्वामित्रादयः स्वर्गपुत्रादिलाभं स्वस्वाभीष्टफलं च अलभत इति बहुश्रुतविषयः।

एवमेव यज्ञेन सर्वेषां जनानां नष्टस्य धनस्य पुनःप्राप्तिः महारोगाणामपि समूलं निवृत्तिः ऐश्वर्यप्राप्तिः, दुस्वप्ननिवृत्तिः, आनन्दसिद्धिः (आयुर्दा अग्नेसि आयुर्मेदेहि...तनुवं मे पाहि-(तै.सं-1.5.5) आरोग्यप्राप्तिः, सत्सन्तानेन वंशाभिवृद्धिः, सकलविद्याप्राप्तिः, वाक्सामर्थ्यसिद्धिः, त्वचि अस्थिषु च विद्यमानदोषनिवृत्तिः, अपमृत्युभयनिवृत्तिः,अन्नसमृद्धिः, सकलसौभाग्यसिद्धिः, सर्वत्रयशोविजयप्राप्तिश्च सिद्ध्यति। अत एवोच्यते यज्ञे सर्वं प्रतिष्ठितम्।।

कतिपये चिन्तयन्ति जटिलस्य नीरसस्य विपुलद्रव्यसाध्ययागकर्मणः किं वा प्रयोजनम्। बहुविधमतेषु एकैकमुपस्थाप्यते- देवानां कोपात् शान्त्यर्थं कर्मक्रियते, विशिष्टपशुः अथवा ओषधिद्रव्यस्य दैवीशक्ति अथवा पापमोचनसामर्थ्यं, ऐहिक समृद्धि तथा पारलौकिक सुखप्राप्त्यर्थं देवताप्रीत्यर्थं यागाः अनुष्ठीयन्ते। ओषधिद्रव्य तथा अन्य द्रव्यादीनां त्यागः तथा च स्वास्थ्यविषयकोद्देशेनेतत्कर्मानुष्ठानमाध्यमेन देवं प्रति कृतज्ञता प्राकट्यते। याज्ञिकाः मन्यन्ते अग्न्यादि विग्रहवतीदेवताः कर्तुः आह्वानं पुरस्कृत्य यज्ञे समुपतिष्ठन्ते एवं च यागाहुतिं स्वीकृत्य अनुष्ठातृणां कामनाः पूरयिष्यन्तीति।।

आधुनिक पाश्चात्यविद्वांसैः अभिप्रेयते यत् यागधूमेन कारबन् उत्पत्या वायुमण्डलः दूष्यति। यस्तु मानवानां हानिकारकः भवति। वर्तमानकाले यानवाहनादिना यन्त्रागारादीना च निर्गतः धूमः समाजे प्राणिनामनारोग्यस्य कारणं भवति। एवमेव यागधूमेन वायुमण्डलस्य हानिरेवोपजायतेति वादयन्तः सन्ति। सामान्यतया धूम्रस्य आरोग्यकारणत्वं कथमुपपद्यते इति विचार्यमाणे- *फ्रांसदेशस्य विज्ञानवेत्ता अध्यापकः ट्रिलवर्ट कथयति- अग्नौ शर्करायाः प्रक्षेपे उत्पन्नेन धूमेन वायुः शुद्धो भवति। अनेन क्षयरोगादीनां शीघ्रमेव नाशः भवति। #एतादृशः डाँ एम् ट्रिल्टने कथयति शुष्काद्राक्षादि शर्करागुणयुक्तफलानां अग्नौ होमे सति जातेन धूमेन टाइफाइड ज्वरस्य जीवाणुः अर्धहोराभ्यन्तरे, अन्यरोगाणां जीवाणुश्च होराभ्यन्तेरे नश्यति इति। $मद्रासस्थ डाँ कर्नलकिङ्गआइ एस् एस् महोदयाः स्व अध्यापनकाले विद्यार्थिनां कृते बहुधा उपदिष्टवन्तः घृतकेसरीमिश्रित तण्डुलहोमेन रोगकीटाणुः नश्यतीति। अनेन रोगहेतुकीटाणां नाशः विशेषद्रव्य होमधूमेन भवतीति प्रमाणिक्रियते।

वायुमण्डलात् कारबन् निष्कासनेन वायुः सम्पूर्णः न शुद्ध्यति। इतोऽपि शरीरहानिकारकांशाः तत्र विद्यन्ते। डाँ जे लैन नायरू-हाइजिन् नामकग्रन्थे लिखति एकस्मिन्प्रकोष्ठे यदि बहवः जनाः भवन्ति तदा यदि वायुसञ्चारः सम्यग् नभवति तर्हि वायुः दोषयुक्तः भवति। तत्र कारबोनिक् एसिड वायुः अधिक प्रमाणो भवति। अनेन शिरोभ्रमणं,शिरोव्यथा मूर्छादि भवन्तीति। अत्र वायोरुष्णता अथवा कारबन् डाईआक्साइड

वायुर्वा न कारणं किन्तु शुद्धवायोरभाव एव कारणम्। मनुष्येषु पशुषु वा मलिनपदार्थः श्वासरूपेण स्वेदरूपेणवा बहिर्निर्गम्य वायुमण्डले प्रविशति। स एव नाशस्य कारणं भवति। कदाचित् प्रयोगे दृष्टं मनुष्यनिर्गतं श्वासरूपं वायुं प्रापितः मूषकः होराभ्यन्तरे मृतः इति। अतो ज्ञायते श्वासरूपो वायुः कारबन् डाई आक्साइड तः अत्यन्तः विषपूरितः । कथनस्य तात्पर्यं वायुमण्डलात् कारबन् वायो निष्कासने शुद्धं न भवति परन्तु दूषितः वायोः मालिन्यता निष्कासनमावश्यकम्।

यागस्य मुख्यः गुणः ज्वलनक्रियया मालिन्यतायाः विनाशः, वायुमण्डलस्य रक्षणं, ऋतू चक्राणां सम्यग् सञ्चालनार्थमावश्यकशक्तिप्रदानम्। मीमांसायामुक्तम् यो हि यागमनुतिष्ठति तं धार्मिक इति समाचक्षते इति। धार्मिकं नाम सत्प्रवृत्या लोके जीवयिता। अतः आधुनिकसमाजे वयं प्रतिनित्यं यागाचरणमाध्यमेन विश्वभ्रातृत्वसम्पादनं , समाजे सौहार्दतावर्धनं, परस्पराबलम्बिसमाजे सर्वेषामभिवृद्धि र्जायते। यागः सर्वासां विद्यानां प्रतिपादकस्थलं अतः यदि निर्विशङ्कया याथातथ्येन आचर्य्येत तर्हि असाध्यसाधकरूपी यज्ञः सर्वान् कामान् पूरयितुं समर्थः भवितुमर्हति। अस्मिन्समये विशेषतया ऋतुचक्रस्य जटिलतापरिदृश्यते तस्य परिहारार्थं तथैव प्रकृतिनिर्मित यागमाध्यमेनैव परिहर्तुं शक्यते अन्यथा अत्युष्ण अतिशीतकोपेन समाजः प्रकृतिकोपे स्थातुं न प्रभवति। व्ययबहुलसमाजे अपुत्रिकः पुत्रप्राप्त्यर्थं कृतप्रयत्नः, दिनेदिने नूतनतयागतानांरोगाणां चिकित्सापद्धत्याः व्ययबहुलता , क्षेत्रे उर्वरतार्थमुपयुज्यमानेन यूरिया इत्यादिना कृषिभूम्या उर्वरतानाशः , सर्वं यज्ञरुपक्रियया  अल्पव्ययेन च भवितुमर्हति। उपर्युक्तानां सर्वासामपि समस्यानां विज्ञानमायाजालमोहिते आधुनिके समाजे यज्ञः एव परमसाधनमिति निश्चप्रचं प्रतिपित्सुरस्मि।


Reference:  -

1. आश्वालयन श्रौतसूत्रम्,
2. सामविधानब्राह्मणम्,कुम्भकोणम्,1981
3. तैत्तरीयसंहिता,वैङ्गलूर,2004
4. वैदिकसंपत्तिः,स्वाध्यायमण्डल,वडोदा,1931 (*पृष्ठ-134,350,353, 374)
5. नारदीयशिक्षा,मैसूर,1943
6. ऋग्वेदः,स्वाध्यायमण्डल,1997.
7. शतपथब्राह्मणम्, उज्जैन, 2002 .
8. अथर्ववेदः-चौखम्बासंस्कृतप्रतिष्ठान,2009  ,

पत्रिका- 1. * सरस्वती अक्टूवर सन् 1919
2. # भारतसुदशाप्रवर्तक जूनसन् 1903
3. $ न्यूवोनिक् पायोनिरप्रेस, प्रयाग।